॥ श्रीमहाकुलकुण्डलिनीसहस्रनामस्तोत्रम् ॥
अथ षडस्त्रिंशः पटलः

श्रीआनन्दभैरवी उवाच
अथ कान्त प्रवक्ष्यामि कुण्डलीचेतनादिकम् ।
सहस्रनामसकलं कुण्डलिन्याः प्रियं सुखम् ॥ ३६-१॥

अष्टोत्तरं महापुण्यं साक्षात् सिद्धिप्रदायकम् ।
तव प्रेमवशेनैव कथयामि शृणुष्व तत् ॥ ३६-२॥

विना यजनयोगेन विना ध्यानेन यत्फलम् ।
तत्फलं लभते सद्यो विद्यायाः सुकृपा भवेत् ॥ ३६-३॥

या विद्या भुवनेशानी त्रैलोक्यपरिपूजिता ।
सा देवी कुण्डली माता त्रैलोक्यं पाति सर्वदा ॥ ३६-४॥

तस्या नाम सहस्राणि अष्टोत्तरशतानि च ।
श्रवणात्पठनान्मन्त्री महाभक्तो भवेदिह ॥ ३६-५॥

एहिके स भवेन्नाथ जीवन्मुक्तो महाबली ॥ ३६-६॥

अस्य श्रीमन्महाकुण्डलीसाष्टोत्तरसहस्रनामस्तोत्रस्य
ब्रह्मषीर्जगतीच्छन्दो भगवती
श्रीमन्महाकुण्डलीदेवता सर्वयोगसमृद्धिसिद्ध्यर्थे विनियोगः॥

कुलेश्वरी कुलानन्दा कुलीना कुलकुण्डली ।
श्रीमन्महाकुण्डली च कुलकन्या कुलप्रिया ॥ ३६-७॥

कुलक्षेत्रस्थिता कौली कुलीनार्थप्रकाशिनी ।
कुलाख्या कुलमार्गस्था कुलशास्त्रार्थपातिनी ॥ ३६-८॥

कुलज्ञा कुलयोग्या च कुलपुष्पप्रकाशिनी
कुलीना च कुलाध्यक्षा कुलचन्दनलेपिता ॥ ३६-९॥

कुलरूपा कुलोद्भूता कुलकुण्डलिवासिनी ।
कुलाभिन्ना कुलोत्पन्ना कुलाचारविनोदिनी ॥ ३६-१०॥

कुलवृक्षसमुद्भूता कुलमाला कुलप्रभा ।
कुलज्ञा कुलमध्यस्था कुलकङ्कणशोभिता ॥ ३६-११॥

कुलोत्तरा कौलपूजा कुलालापा कुलक्रिया ।
कुलभेदा कुलप्राणा कुलदेवी कुलस्तुतिः ॥ ३६-१२॥

कौलिका कालिका काल्या कलिभिन्ना कलाकला ।
कलिकल्मषहन्त्री च कलिदोषविनाशिनी ॥ ३६-१३॥

कङ्काली केवलानन्दा कालज्ञा कालधारिणी ।
कौतुकी कौमुदी केका काका काकलयान्तरा ॥ ३६-१४॥

कोमलाङ्गी करालास्या कन्दपूज्या च कोमला ।
कैशोरी काकपुच्छस्था कम्बलासनवासिनी ॥ ३६-१५॥

कैकेयीपूजिता कोला कोलपुत्री कपिध्वजा ।
कमला कमलाक्षी च कम्बलाश्वतरप्रिया ॥ ३६-१६॥

कलिकाभङ्गदोषस्था कालज्ञा कालकुण्डली ।
काव्यदा कविता वाणी कालसन्दर्भभेदिनी ॥ ३६-१७॥

कुमारी करुणाकारा कुरुसैन्यविनाशिनी ।
कान्ता कुलगता कामा कामिनी कामनाशिनी ॥ ३६-१८॥

कामोद्भवा कामकन्या केवला कालघातिनी ।
कैलासशिखरारूढा कैलासपतिसेविता ॥ ३६-१९॥

कैलासनाथनमिता केयूरहारमण्डिता ।
कन्दर्पा कठिनानन्दा कुलगा कीचकृत्यहा ॥ ३६-२०॥

कमलास्या कठोरा च कीटरूपा कटिस्थिता ।
कन्देश्वरी कन्दरूपा कोलिका कन्दवासिनी ॥ ३६-२१॥

कूटस्था कूटभक्षा च कालकूटविनाशिनी ।
कामाख्या कमला काम्या कामराजतनूद्भवा ॥ ३६-२२॥

कामरूपधरा कम्रा कमनीया कविप्रिया ।

कञ्जानना कञ्जहस्ता कञ्जपत्रायतेक्षणा ॥ ३६-२३॥

काकिनी कामरूपस्था कामरूपप्रकाशिनी ।
कोलाविध्वंसिनी कङ्का कलङ्कार्ककलङ्किनी ॥ ३६-२४॥

महाकुलनदी कर्णा कर्णकाण्डविमोहिनी ।
काण्डस्था काण्डकरुणा कर्मकस्था कुटुम्बिनी ॥ ३६-२५॥

कमलाभा भवा कल्ला करुणा करुणामयी ।
करुणेशी कराकर्त्री कर्तृहस्ता कलोदया ॥ ३६-२६॥

कारुण्यसागरोद्भूता कारुण्यसिन्धुवासिनी ।
कात्तीकेशी कात्तीकस्था कात्तीकप्राणपालनी ॥ ३६-२७॥

करुणानिधिपूज्या च करणीया क्रिया कला ।
कल्पस्था कल्पनिलया कल्पातीता च कल्पिता ॥ ३६-२८॥

कुलया कुलविज्ञाना कषीणी कालरात्रिका ।
कैवल्यदा कोकरस्था कलमञ्जीररञ्जनी ॥ ३६-२९॥

कलयन्ती कालजिह्वा किङ्करासनकारिणी ।
कुमुदा कुशलानन्दा कौशल्याकाशवासिनी ॥ ३६-३०॥

कसापहासहन्त्री च कैवल्यगुणसम्भवा ।
एकाकिनी अर्करूपा कुवला कर्कटस्थिता ॥ ३६-३१॥

कर्कोटका कोष्ठरूपा कूटवह्निकरस्थिता ।
कूजन्ती मधुरध्वानं कामयन्ती सुलक्षणम् ॥ ३६-३२॥

केतकी कुसुमानन्दा केतकीपुण्यमण्डिता ।
कर्पूरपूररुचिरा कर्पूरभक्षणप्रिया ॥ ३६-३३॥

कपालपात्रहस्ता च कपालचन्द्रधारिणी ।
कामधेनुस्वरूपा च कामधेनुः क्रियान्विता ॥ ३६-३४॥

कश्यपी काश्यपा कुन्ती केशान्ता केशमोहिनी ।
कालकर्त्री कूपकर्त्री कुलपा कामचारिणी ॥ ३६-३५॥

कुङ्कुमाभा कज्जलस्था कमिता कोपघातिनी ।
केलिस्था केलिकलिता कोपना कर्पटस्थिता ॥ ३६-३६॥

कलातीता कालविद्या कालात्मपुरुषोद्भवा ।
कष्टस्था कष्टकुष्ठस्था कुष्ठहा कष्टहा कुशा ॥ ३६-३७॥

कालिका स्फुटकर्त्री च काम्बोजा कामला कुला ।
कुशलाख्या काककुष्ठा कर्मस्था कूर्ममध्यगा ॥ ३६-३८॥

कुण्डलाकारचक्रस्था कुण्डगोलोद्भवा कफा ।
कपित्थाग्रवसाकाशा कपित्थरोधकारिणी ॥ ३६-३९॥

काहोडा काहडा काडा कङ्कला भाषकारिणी ।
कनका कनकाभा च कनकाद्रिनिवासिनी ॥ ३६-४०॥

कार्पासयज्ञसूत्रस्था कूटब्रह्मार्थसाधिनी ।
कलञ्जभक्षिणी क्रूरा क्रोधपुञ्जा कपिस्थिता ॥ ३६-४१॥

कपाली साधनरता कनिष्ठाकाशवासिनी ।
कुञ्जरेशी कुञ्जरस्था कुञ्जरा कुञ्जरागतिः ॥ ३६-४२॥

कुञ्जस्था कुञ्जरमणी कुञ्जमन्दिरवासिनी ।
कुपिता कोपशून्या च कोपाकोपविवजीता ॥ ३६-४३॥

कपिञ्जलस्था कापिञ्जा कपिञ्जलतरूद्भवा
कुन्तीप्रेमकथाविष्टा कुन्तीमानसपूजिता ॥ ३६-४४॥

कुन्तला कुन्तहस्ता च कुलकुन्तललोहिनी ।
कान्ताङ्घ्रसेविका कान्तकुशला कोशलावती ॥ ३६-४५॥

केशिहन्त्री ककुत्स्था च ककुत्स्थवनवासिनी ।
कैलासशिखरानन्दा कैलासगिरिपूजिता ॥ ३६-४६॥

कीलालनिर्मलाकारा(?) कीलालमुग्धकारिणी ।
कुतुना कुट्टही कुट्टा कूटना मोदकारिणी ॥ ३६-४७॥

क्रौङ्कारी क्रौङ्करी काशी कुहुशब्दस्था किरातिनी ।
कूजन्ती सर्ववचनं कारयन्ती कृताकृतम् ॥ ३६-४८॥

कृपानिधिस्वरूपा च कृपासागरवासिनी ।
केवलानन्दनिरता केवलानन्दकारिणी ॥ ३६-४९॥

कृमिला कृमिदोषघ्नी कृपा कपटकुट्टिता ।
कृशाङ्गी क्रमभङ्गस्था किङ्करस्था कटस्थिता ॥ ३६-५०॥

कामरूपा कान्तरता कामरूपस्य सिद्धिदा ।
कामरूपपीठदेवी कामरूपाङ्कुजा कुजा ॥ ३६-५१॥

कामरूपा कामविद्या कामरूपादिकालिका ।
कामरूपकला काम्या कामरूपकुलेश्वरी ॥ ३६-५२॥

कामरूपजनानन्दा कामरूपकुशाग्रधीः ।
कामरूपकराकाशा कामरूपतरुस्थिता ॥ ३६-५३॥

कामात्मजा कामकला कामरूपविहारिणी ।
कामशास्त्रार्थमध्यस्था कामरूपक्रियाकला ॥ ३६-५४॥

कामरूपमहाकाली कामरूपयशोमयी ।
कामरूपपरमानन्दा कामरूपादिकामिनी ॥ ३६-५५॥

कूलमूला कामरूपपद्ममध्यनिवासिनी ।
कृताञ्जलिप्रिया कृत्या कृत्यादेवीस्थिता कटा ॥ ३६-५६॥

कटका काटका कोटिकटिघण्टविनोदिनी ।
कटिस्थूलतरा काष्ठा कात्यायनसुसिद्धिदा ॥ ३६-५७॥

कात्यायनी काचलस्था कामचन्द्रानना कथा ।
काश्मीरदेशनिरता काश्मीरी कृषिकर्मजा ॥ ३६-५८॥

कृषिकर्मस्थिता कौर्मा कूर्मपृष्ठनिवासिनी ।
कालघण्टा नादरता कलमञ्जीरमोहिनी ॥ ३६-५९॥

कलयन्ती शत्रुवर्गान् क्रोधयन्ती गुणागुणम्
कामयन्ती सर्वकामं काशयन्ती जगत्त्रयम् ॥ ३६-६०॥

कौलकन्या कालकन्या कौलकालकुलेश्वरी

कौलमन्दिरसंस्था च कुलधर्मविडम्बिनी ॥ ३६-६१॥

कुलधर्मरताकारा कुलधर्मविनाशिनी ।
कुलधर्मपण्डिता च कुलधर्मसमृद्धिदा ॥ ३६-६२॥

कौलभोगमोक्षदा च कौलभोगेन्द्रयोगिनी ।
कौलकर्मा नवकुला श्वेतचम्पकमालिनी ॥ ३६-६३॥

कुलपुष्पमाल्याकान्ता कुलपुष्पभवोद्भवा ।
कौलकोलाहलकरा कौलकर्मप्रिया परा ॥ ३६-६४॥

काशीस्थिता काशकन्या काशी चक्षुःप्रिया कुथा
काष्ठासनप्रिया काका काकपक्षकपालिका ॥ ३६-६५॥

कपालरसभोज्या च कपालनवमालिनी ।
कपालस्था च कापाली कपालसिद्धिदायिनी ॥ ३६-६६॥

कपाला कुलकर्त्री च कपालशिखरस्थिता ।
कथना कृपणश्रीदा कृपी कृपणसेविता ॥ ३६-६७॥

कर्महन्त्री कर्मगता कर्माकर्मविवजीता ।
कर्मसिद्धिरता कामी कर्मज्ञाननिवासिनी ॥ ३६-६८॥

कर्मधर्मसुशीला च कर्मधर्मवशङ्करी ।
कनकाब्जसुनिर्माणमहासिंहासनस्थिता ॥ ३६-६९॥

कनकग्रन्थिमाल्याढ्या कनकग्रन्थिभेदिनी ।
कनकोद्भवकन्या च कनकाम्भोजवासिनी ॥ ३६-७०॥

कालकूटादिकूटस्था किटिशब्दान्तरस्थिता ।
कङ्कपक्षिनादमुखा कामधेनूद्भवा कला ॥ ३६-७१॥

कङ्कणाभा धरा कर्द्दा कर्द्दमा कर्द्दमस्थिता ।
कर्द्दमस्थजलाच्छन्ना कर्द्दमस्थजनप्रिया ॥ ३६-७२॥

कमठस्था कार्मुकस्था कम्रस्था कंसनाशिनी ।
कंसप्रिया कंसहन्त्री कंसाज्ञानकरालिनी ॥ ३६-७३॥

काञ्चनाभा काञ्चनदा कामदा क्रमदा कदा ।
कान्तभिन्ना कान्तचिन्ता कमलासनवासिनी ॥ ३६-७४॥

कमलासनसिद्धिस्था कमलासनदेवता ।
कुत्सिता कुत्सितरता कुत्सा शापविवजीता ॥ ३६-७५॥

कुपुत्ररक्षिका कुल्ला कुपुत्रमानसापहा ।
कुजरक्षकरी कौजी कुब्जाख्या कुब्जविग्रहा ॥ ३६-७६॥

कुनखी कूपदीक्षुस्था कुकरी कुधनी कुदा ।
कुप्रिया कोकिलानन्दा कोकिला कामदायिनी ॥ ३६-७७॥

कुकामिना कुबुद्धिस्था कूर्पवाहन मोहिनी ।
कुलका कुललोकस्था कुशासनसुसिद्धिदा ॥ ३६-७८॥

कौशिकी देवता कस्या कन्नादनादसुप्रिया ।
कुसौष्ठवा कुमित्रस्था कुमित्रशत्रुघातिनी ॥ ३६-७९॥

कुज्ञाननिकरा कुस्था कुजिस्था कर्जदायिनी ।
ककर्जा कर्ज्जकरिणी कर्जवद्धविमोहिनी ॥ ३६-८०॥

कर्जशोधनकर्त्री च कालास्त्रधारिणी सदा ।
कुगतिः कालसुगतिः कलिबुद्धिविनाशिनी ॥ ३६-८१॥

कलिकालफलोत्पन्ना कलिपावनकारिणी ।
कलिपापहरा काली कलिसिद्धिसुसूक्ष्मदा ॥ ३६-८२॥

कालिदासवाक्यगता कालिदाससुसिद्धिदा ।
कलिशिक्षा कालशिक्षा कन्दशिक्षापरायणा ॥ ३६-८३॥

कमनीयभावरता कमनीयसुभक्तिदा ।
करकाजनरूपा च कक्षावादकरा। करा ॥ ३६-८४॥

कञ्चुवर्णा काकवर्णा क्रोष्टुरूपा कषामला ।
क्रोष्ट्रनादरता कीता कातरा कातरप्रिया ॥ ३६-८५॥

कातरस्था कातराज्ञा कातरानन्दकारिणी ।
काशमर्द्दतरूद्भूता काशमर्द्दविभक्षिणी ॥ ३६-८६॥

कष्टहानिः कष्टदात्री कष्टलोकविरक्तिदा ।
कायागता कायसिद्धिः कायानन्दप्रकाशिनी ॥ ३६-८७॥

कायगन्धहरा कुम्भा कायकुम्भा कठोरिणी ।
कठोरतरुसंस्था च कठोरलोकनाशिनी ॥ ३६-८८॥

कुमार्गस्थापिता कुप्रा कार्पासतरुसम्भवा ।
कार्पासवृक्षसूत्रस्था कुवर्गस्था करोत्तरा ॥ ३६-८९॥

कर्णाटकर्णसम्भूता कार्णाटी कर्णपूजिता ।
कर्णास्त्ररक्षिका कर्णा कर्णहा कर्णकुण्डला ॥ ३६-९०॥

कुन्तलादेशनमिता कुटुम्बा कुम्भकारिका ।
कर्णासरासना कृष्टा कृष्णहस्ताम्बुजाजीता ॥ ३६-९१॥

कृष्णाङ्गी कृष्णदेहस्था कुदेशस्था कुमङ्गला ।
क्रूरकर्मस्थिता कोरा किरात कुलकामिनी ॥ ३६-९२॥

कालवारिप्रिया कामा काव्यवाक्यप्रिया क्रुधा ।
कञ्जलता कौमुदी च कुज्योत्स्ना कलनप्रिया ॥ ३६-९३॥

कलना सर्वभूतानां कपित्थवनवासिनी ।
कटुनिम्बस्थिता काख्या कवर्गाख्या कवगीका ॥ ३६-९४॥

किरातच्छेदिनी कार्या कार्याकार्यविवजीता ।
कात्यायनादिकल्पस्था कात्यायनसुखोदया ॥ ३६-९५॥

कुक्षेत्रस्था कुलाविघ्ना करणादिप्रवेशिनी ।
काङ्काली किङ्कला काला किलिता सर्वकामिनी ॥ ३६-९६॥

कीलितापेक्षिता कूटा कूटकुङ्कुमचचीता ।
कुङ्कुमागन्धनिलया कुटुम्बभवनस्थिता ॥ ३६-९७॥

कुकृपा करणानन्दा कवितारसमोहिनी ।
काव्यशास्त्रानन्दरता काव्यपूज्या कवीश्वरी ॥ ३६-९८॥

कटकादिहस्तिरथहयदुन्दुभिशब्दिनी ।

कितवा क्रूरधूर्तस्था केकाशब्दनिवासिनी ॥ ३६-९९॥

कें केवलाम्बिता केता केतकीपुष्पमोहिनी ।
कैं कैवल्यगुणोद्वास्या कैवल्यधनदायिनी ॥ ३६-१००॥

करी धनीन्द्रजननी काक्षताक्षकलङ्किनी ।
कुडुवान्ता कान्तिशान्ता कांक्षा पारमहंस्यगा ॥ ३६-१०१॥

कर्त्री चित्ता कान्तवित्ता कृषणा कृषिभोजिनी ।
कुङ्कुमाशक्तहृदया केयूरहारमालिनी ॥ ३६-१०२॥

कीश्वरी केशवा कुम्भा कैशोरजनपूजिता ।
कलिकामध्यनिरता कोकिलस्वरगामिनी ॥ ३६-१०३॥

कुरदेहहरा कुम्बा कुडुम्बा कुरभेदिनी ।
कुण्डलीश्वरसंवादा कुण्डलीश्वरमध्यगा ॥ ३६-१०४॥

कालसूक्ष्मा कालयज्ञा कालहारकरी कहा ।
कहलस्था कलहस्था कलहा कलहाङ्करी ॥ ३६-१०५॥

कुरङ्गी श्रीकुरङ्गस्था कोरङ्गी कुण्डलापहा ।
कुकलङ्की कृष्णबुद्धिः कृष्णा ध्याननिवासिनी ॥ ३६-१०६॥

कुतवा काष्ठवलता कृतार्थकरणी कुसी ।
कलनकस्था कस्वरस्था कलिका दोषभङ्गजा ॥ ३६-१०७॥

कुसुमाकारकमला कुसुमस्रग्विभूषणा ।
किञ्जल्का कैतवार्कशा कमनीयजलोदया ॥ ३६-१०८॥

ककारकूटसर्वाङ्गी ककाराम्बरमालिनी ।
कालभेदकरा काटा कर्पवासा ककुत्स्थला ॥ ३६-१०९॥

कुवासा कबरी कर्वा कूसवी कुरुपालनी ।
कुरुपृष्ठा कुरुश्रेष्ठा कुरूणां ज्ञाननाशिनी ॥ ३६-११०॥

कुतूहलरता कान्ता कुव्याप्ता कष्टबन्धना ।
कषायणतरुस्था च कषायणरसोद्भवा ॥ ३६-१११॥

कतिविद्या कुष्ठदात्री कुष्ठिशोकविसर्जनी ।
काष्ठासनगता कार्याश्रया का श्रयकौलिका ॥ ३६-११२॥

कालिका कालिसन्त्रस्ता कौलिकध्यानवासिनी ।
क्लृप्तस्था क्लृप्तजननी क्लृप्तच्छन्ना कलिध्वजा ॥ ३६-११३॥

केशवा केशवानन्दा केश्यादिदानवापहा ।
केशवाङ्गजकन्या च केशवाङ्गजमोहिनी ॥ ३६-११४॥

किशोरार्चनयोग्या च किशोरदेवदेवता ।
कान्तश्रीकरणी कुत्या कपटा प्रियघातिनी ॥ ३६-११५॥

कुकामजनिता कौञ्चा कौञ्चस्था कौञ्चवासिनी ।
कूपस्था कूपबुद्धिस्था कूपमाला मनोरमा ॥ ३६-११६॥

कूपपुष्पाश्रया कान्तिः क्रमदाक्रमदाक्रमा ।
कुविक्रमा कुक्रमस्था कुण्डलीकुण्डदेवता ॥ ३६-११७॥

कौण्डिल्यनगरोद्भूता कौण्डिल्यगोत्रपूजिता ।
कपिराजस्थिता कापी कपिबुद्धिबलोदया ॥ ३६-११८॥

कपिध्यानपरा मुख्या कुव्यवस्था कुसाक्षिदा ।
कुमध्यस्था कुकल्पा च कुलपङ्क्तिप्रकाशिनी ॥ ३६-११९॥

कुलभ्रमरदेहस्था कुलभ्रमरनादिनी ।
कुलासङ्गा कुलाक्षी च कुलमत्ता कुलानिला ॥ ३६-१२०॥

कलिचिन्हा कालचिन्हा कण्ठचिन्हा कवीन्द्रजा ।
करीन्द्रा कमलेशश्रीः कोटिकन्दर्पदर्पहा ॥ ३६-१२१॥

कोटितेजोमयी कोट्या कोटीरपद्ममालिनी ।
कोटीरमोहिनी कोटिः कोटिकोटिविधूद्भवा ॥ ३६-१२२॥

कोटिसूर्यसमानास्या कोटिकालानलोपमा ।
कोटीरहारललिता कोटिपर्वतधारिणी ॥ ३६-१२३॥

कुचयुग्मधरा देवी कुचकामप्रकाशिनी ।
कुचानन्दा कुचाच्छन्ना कुचकाठिन्यकारिणी ॥ ३६-१२४॥

कुचयुग्ममोहनस्था कुचमायातुरा कुचा ।
कुचयौवनसम्मोहा कुचमर्द्दनसौख्यदा ॥ ३६-१२५॥

काचस्था काचदेहा च काचपूरनिवासिनी ।
काचग्रस्था काचवर्णा कीचकप्राणनाशिनी ॥ ३६-१२६॥

कमला लोचनप्रेमा कोमलाक्षी मनुप्रिया ।
कमलाक्षी कमलजा कमलास्या करालजा ॥ ३६-१२७॥

कमलाङ्घिरद्वया काम्या कराख्या करमालिनी ।
करपद्मधरा कन्दा कन्दबुद्धिप्रदायिनी ॥ ३६-१२८॥

कमलोद्भवपुत्री च कमला पुत्रकामिनी ।
किरन्ती किरणाच्छन्ना किरणप्राणवासिनी ॥ ३६-१२९॥

काव्यप्रदा काव्यचित्ता काव्यसारप्रकाशिनी ।
कलाम्बा कल्पजननी कल्पभेदासनस्थिता ॥ ३६-१३०॥

कालेच्छा कालसारस्था कालमारणघातिनी ।
किरणक्रमदीपस्था कर्मस्था क्रमदीपिका ॥ ३६-१३१॥

काललक्ष्मीः कालचण्डा कुलचण्डेश्वरप्रिया ।
काकिनीशक्तिदेहस्था कितवा किन्तकारिणी ॥ ३६-१३२॥

करञ्चा कञ्चुका क्रौञ्चा काकचञ्चुपुटस्थिता ।
काकाख्या काकशब्दस्था कालाग्निदहनाथीका ॥ ३६-१३३॥

कुचक्षनिलया कुत्रा कुपुत्रा क्रतुरक्षिका ।
कनकप्रतिभाकारा करबन्धाकृतिस्थिता ॥ ३६-१३४॥

कृतिरूपा कृतिप्राणा कृतिक्रोधनिवारिणी ।
कुक्षिरक्षाकरा कुक्षा कुक्षिब्रह्माण्डधारिणी ॥ ३६-१३५॥

कुक्षिदेवस्थिता कुक्षिः क्रियादक्षा क्रियातुरा ।
क्रियानिष्ठा क्रियानन्दा क्रतुकर्मा क्रियाप्रिया ॥ ३६-१३६॥

कुशलासवसंशक्ता कुशारिप्राणवल्लभा ।

कुशारिवृक्षमदिरा काशीराजवशोद्यमा ॥ ३६-१३७॥

काशीराजगृहस्था च कर्णभ्रातृगृहस्थिता ।
कर्णाभरणभूषाढ्या कण्ठभूषा च कण्ठिका ॥ ३६-१३८॥

कण्ठस्थानगता कण्ठा कण्ठपद्मनिवासिनी ।
कण्ठप्रकाशकरिणी कण्ठमाणिक्यमालिनी ॥ ३६-१३९॥

कण्ठपद्मसिद्धिकरी कण्ठाकाशनिवासिनी
कण्ठपद्मसाकिनीस्था कण्ठषोडशपत्रिका ॥ ३६-१४०॥

कृष्णाजिनधरा विद्या कृष्णाजिनसुवाससी ।
कुतकस्था कुखेलस्था कुण्डवालङ्कृताकृता ॥ ३६-१४१॥

कलगीता कालघजा कलभङ्गपरायणा ।
कालीचन्द्रा कला काव्या कुचस्था कुचलप्रदा ॥ ३६-१४२॥

कुचौरघातिनी कच्छा कच्छादस्था कजातना ।
कञ्जाच्छदमुखी कञ्जा कञ्जतुण्डा कजीवली ॥ ३६-१४३॥

कामराभार्सुरवाद्यस्था कियधंकारनादिनी ।
कणादयज्ञसूत्रस्था कीलालयज्ञसञ्ज्ञका ॥ ३६-१४४॥

कटुहासा कपाटस्था कटधूमनिवासिनी ।
कटिनादघोरतरा कुट्टला पाटलिप्रिया ॥ ३६-१४५॥

कामचाराब्जनेत्रा च कामचोद्गारसंक्रमा ।
काष्ठपर्वतसंदाहा कुष्ठाकुष्ठ निवारिणी ॥ ३६-१४६॥

कहोडमन्त्रसिद्धस्था काहला डिण्डिमप्रिया ।
कुलडिण्डिमवाद्यस्था कामडामरसिद्धिदा ॥ ३६-१४७॥

कुलामरवध्यस्था कुलकेकानिनादिनी ।
कोजागरढोलनादा कास्यवीररणस्थिता ॥ ३६-१४८॥

कालादिकरणच्छिद्रा करुणानिधिवत्सला ।
क्रतुश्रीदा कृतार्थश्रीः कालतारा कुलोत्तरा ॥ ३६-१४९॥

कथापूज्या कथानन्दा कथना कथनप्रिया ।
कार्थचिन्ता कार्थविद्या काममिथ्यापवादिनी ॥ ३६-१५०॥

कदम्बपुष्पसङ्काशा कदम्बपुष्पमालिनी ।
कादम्बरी पानतुष्टा कायदम्भा कदोद्यमा ॥ ३६-१५१॥

कुङ्कुलेपत्रमध्यस्था कुलाधारा धरप्रिया ।
कुलदेवशरीरार्धा कुलधामा कलाधरा ॥ ३६-१५२॥

कामरागा भूषणाढ्या कामिनीरगुणप्रिया ।
कुलीना नागहस्ता च कुलीननागवाहिनी ॥ ३६-१५३॥

कामपूरस्थिता कोपा कपाली बकुलोद्भवा ।
कारागारजनापाल्या कारागारप्रपालिनी ॥ ३६-१५४॥

क्रियाशक्तिः कालपङ्क्तिः कार्णपङ्क्तिः कफोदया ।
कामफुल्लारविन्दस्था कामरूपफलाफला ॥ ३६-१५५॥

कायफला कायफेणा कान्ता नाडीफलीश्वरा ।
कमफेरुगता गौरी कायवाणी कुवीरगा ॥ ३६-१५६॥

कबरीमणिबन्धस्था कावेरीतीर्थसङ्गमा ।
कामभीतिहरा कान्ता कामवाकुभ्रमातुरा ॥ ३६-१५७॥

कविभावहरा भामा कमनीयभयापहा ।
कामगर्भदेवमाता कामकल्पलतामरा ॥ ३६-१५८॥

कमठप्रियमांसादा कमठा मर्कटप्रिया ।
किमाकारा किमाधारा कुम्भकारमनस्थिता ॥ ३६-१५९॥

काम्ययज्ञस्थिता चण्डा काम्ययज्ञोपवीतिका ।
कामयागसिद्धिकरी काममैथुनयामिनी ॥ ३६-१६०॥

कामाख्या यमलाशस्था कालयामा कुयोगिनी ।
कुरुयागहतायोग्या कुरुमांसविभक्षिणी ॥ ३६-१६१॥

कुरुरक्तप्रियाकारी किङ्करप्रियकारिणी ।
कर्त्रीश्वरी कारणात्मा कविभक्षा कविप्रिया ॥ ३६-१६२॥

कविशत्रुप्रष्ठलग्ना कैलासोपवनस्थिता ।
कलित्रिधा त्रिसिद्धिस्था कलित्रिदिनसिद्धिदा ॥ ३६-१६३॥

कलङ्करहिता काली कलिकल्मषकामदा ।
कुलपुष्परङ्ग सूत्रमणिग्रन्थिसुशोभना ॥ ३६-१६४॥

कम्बोजवङ्गदेशस्था कुलवासुकिरक्षिका ।
कुलशास्त्रक्रिया शान्तिः कुलशान्तिः कुलेश्वरी ॥ ३६-१६५॥

कुशलप्रतिभा काशी कुलषट्चक्रभेदिनी ।
कुलषट्पद्ममध्यस्था कुलषट्पद्मदीपिनी ॥ ३६-१६६॥

कृष्णमार्जारकोलस्था कृष्णमार्जारषष्ठिका ।
कुलमार्जारकुपिता कुलमार्जारषोडशी ॥ ३६-१६७॥

कालान्तकवलोत्पन्ना कपिलान्तकघातिनी ।
कलहासा कालहश्री कलहार्था कलामला ॥ ३६-१६८॥

कक्षपपक्षरक्षा च कुक्षेत्रपक्षसंक्षया ।
काक्षरक्षासाक्षिणी च महामोक्षप्रतिष्ठिता ॥ ३६-१६९॥

अर्ककोटिशतच्छाया आन्वीक्षिकिकराचीता ।
कावेरीतीरभूमिस्था आग्नेयार्कास्त्रधारिणी ॥ ३६-१७०॥

इं किं श्रीं कामकमला पातु कैलासरक्षिणी ।
मम श्रीं ईं बीजरूपा पातु काली शिरस्थलम् ॥ ३६-१७१॥

उरुस्थलाब्जं सकलं तमोल्का पातु कालिका ।
ऊडुम्बन्यर्करमणी उष्ट्रेग्रा कुलमातृका ॥ ३६-१७२॥

कृतापेक्षा कृतिमती कुङ्कारी किंलिपिस्थिता ।
कुंदीर्घस्वरा क्लृप्ता च कें कैलासकराचीका ॥ ३६-१७३॥

कैशोरी कैं करी कैं कें बीजाख्या नेत्रयुग्मकम् ।
कोमा मतङ्गयजिता कौशल्यादि कुमारिका ॥ ३६-१७४॥

पातु मे कर्णयुग्मन्तु क्रौं क्रौं जीवकरालिनी ।

गण्डयुग्मं सदा पातु कुण्डली अङ्कवासिनी ॥ ३६-१७५॥

अर्ककोटिशताभासा अक्षराक्षरमालिनी ।
आशुतोषकरी हस्ता कुलदेवी निरञ्जना ॥ ३६-१७६॥

पातु मे कुलपुष्पाढ्या पृष्ठदेशं सुकृत्तमा ।
कुमारी कामनापूर्णा पार्श्वदेशं सदावतु ॥ ३६-१७७॥

देवी कामाख्यका देवी पातु प्रत्यङ्गिरा कटिम् ।
कटिस्थदेवता पातु लिङ्गमूलं सदा मम ॥ ३६-१७८॥

गुह्यदेशं काकिनी मे लिङ्गाधः कुलसिंहिका ।
कुलनागेश्वरी पातु नितम्बदेशमुत्तमम् ॥ ३६-१७९॥

कङ्कालमालिनी देवी मे पातु चारुमूलकम् ।
जंघायुग्मं सदा पातु कीतीः चक्रापहारिणी ॥ ३६-१८०॥

पादयुग्मं पाकसंस्था पाकशासनरक्षिका ।
कुलालचक्रभ्रमरा पातु पादाङ्गुलीर्मम ॥ ३६-१८१॥

नखाग्राणि दशविधा तथा हस्तद्वयस्य च ।
विंशरूपा कालनाक्षा सर्वदा परिरक्षतु ॥ ३६-१८२॥

कुलच्छत्राधाररूपा कुलमण्डलगोपिता ।
कुलकुण्डलिनी माता कुलपण्डितमण्डिता ॥ ३६-१८३॥

काकाननी काकतुण्डी काकायुः प्रखरार्कजा ।
काकज्वरा काकजिह्वा काकाजिज्ञा सनस्थिता ॥ ३६-१८४॥

कपिध्वजा कपिक्रोशा कपिबाला हिकस्वरा ।
कालकाञ्ची विंशतिस्था सदा विंशनखाग्रहम् ॥ ३६-१८५॥

पातु देवी कालरूपा कलिकालफलालया ।
वाते वा पर्वते वापि शून्यागारे चतुष्पथे ॥ ३६-१८६॥

कुलेन्द्रसमयाचारा कुलाचारजनप्रिया ।
कुलपर्वतसंस्था च कुलकैलासवासिनी ॥ ३६-१८७॥

महादावानले पातु कुमार्गे कुत्सितग्रहे ।
राज्ञोऽप्रिये राजवश्ये महाशत्रुविनाशने ॥ ३६-१८८॥

कलिकालमहालक्ष्मीः क्रियालक्ष्मीः कुलाम्बरा ।
कलीन्द्रकीलिता कीला कीलालस्वर्गवासिनी ॥ ३६-१८९॥

दशदिक्षु सदा पातु इन्द्रादिदशलोकपा ।
नवच्छिन्ने सदा पातु सूर्यादिकनवग्रहा ॥ ३६-१९०॥

पातु मां कुलमांसाढ्या कुलपद्मनिवासिनी ।
कुलद्रव्यप्रिया मध्या षोडशी भुवनेश्वरी ॥ ३६-१९१॥

विद्यावादे विवादे च मत्तकाले महाभये ।
दुर्भीक्षादिभये चैव व्याधिसङ्करपीडिते ॥ ३६-१९२॥

कालीकुल्ला कपाली च कामाख्या कामचारिणी ।
सदा मां कुलसंसर्गे पातु कौले सुसङ्गता ॥ ३६-१९३॥

सर्वत्र सर्वदेशे च कुलरूपा सदावतु ।
इत्येतत् कथितं नाथ मातुः प्रसादहेतुना ॥ ३६-१९४॥

अष्टोत्तरशतं नाम सहस्रं कुण्डलीप्रियम् ।
कुलकुण्डलिनीदेव्याः सर्वमन्त्रसुसिद्धये ॥ ३६-१९५॥

सर्वदेवमनूनाञ्च चैतन्याय सुसिद्धये ।
अणिमाद्यष्टसिद्ध्यर्थं साधकानां हिताय च ॥ ३६-१९६॥

ब्राह्मणाय प्रदातव्यं कुलद्रव्यपराय च ।
अकुलीनेऽब्राह्मणे च न देयः कुण्डलीस्तवः ।
प्रवृत्ते कुण्डलीचक्रे सर्वे वर्णा द्विजातयः ॥ ३६-१९७॥

निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक्--पृथक् ।
कुलीनाय प्रदातव्यं साधकाय विशेषतः ॥ ३६-१९८॥

दानादेव हि सिद्धिः स्यान्ममाज्ञाबलहेतुना ।
मम क्रियायां यस्तिष्ठेत्स मे पुत्रो न संशयः ॥ ३६-१९९॥

स आयाति मम पदं जीवन्मुक्तः स वासवः ।

आसवेन समांसेन कुलवह्नौ महानिशि ॥ ३६-२००॥

नाम प्रत्येकमुच्चार्य जुहुयात् कायसिद्धये ।
पञ्चाचाररतो भूत्वा ऊर्द्ध्वरेता भवेद्यतिः ॥ ३६-२०१॥

संवत्सरान्मम स्थाने आयाति नात्र संशयः ।
एहिके कायसिद्धिः स्यात् दैहिके सर्वसिद्धिदः ॥ ३६-२०२॥

वशी भूत्वा त्रिमार्गस्थाः स्वर्गभूतलवासिनः ।
अस्य भृत्याः प्रभवन्ति इन्द्रादिलोकपालकाः ॥ ३६-२०३॥

स एव योगी परमो यस्यार्थेऽयं सुनिश्चलः ।
स एव खेचरो भक्तो नारदादिशुकोपमः ॥ ३६-२०४॥

यो लोकः प्रजपत्येवं स शिवो न च मानुषः ।
स समाधिगतो नित्यो ध्यानस्थो योगिवल्लभः ॥ ३६-२०५॥

चतुर्व्यूहगतो देवः सहसा नात्र संशयः ।
यः प्रधारयते भक्त्या कण्ठे वा मस्तके भुजे ॥ ३६-२०६॥

स भवेत् कालिकापुत्रो विद्यानाथः स्वयंभुवि ।
धनेशः पुत्रवान् योगी यतीशः सर्वगो भवेत् ॥ ३६-२०७॥

वामा वामकरे धृत्वा सर्वसिद्धीश्वरो भवेत् ॥ ३६-२०८॥

यदि पठति मनुष्यो मानुषी वा महत्या ।
सकलधनजनेशी पुत्रिणी जीववत्सा ।
कुलपतिरिह लोके स्वर्गमोक्षैकहेतुः
स भवति भवनाथो योगिनीवल्लभेशः ॥ ३६-२०९॥

पठति य इह नित्यं भक्तिभावेन मर्त्यो
हरणमपि करोति प्राणविप्राणयोगः ।
स्तवनपठनपुण्यं कोटिजन्माघनाश।
कथितुमपि न शक्तोऽहं महामांसभक्षा ॥ ३६-२१०॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने
सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे
भैरवीभैरवसंवादे महाकुलकुण्डलिनी

अष्टोत्तरसहस्रनामस्तवकवचं नाम षट्त्रिंशत्तमः
पटलः ॥ ३६॥